विश्वविस्तीर्णलक्ष्मीकः सकलाभोगभासुरः ।
समस्तकुलवसल्लक्ष्मीरुर्मिमद्भैमवान्वितः ॥

अथ क्रियादिशब्दाः—

अवैस्तालसल्लक्ष्मीः सुपीवरवसद्द्युतिः ।
सम्पन्नव्याप्तलक्ष्मीकः परकोटिश्रिया युतः ॥

धामभावौ प्रभावश्च विभावश्च यथोचितम् ।
वर्णस्याकारशब्देभ्यः सम्प्रयोज्या मनीषिभिः ॥ ७९ ॥

यथा—

स्थूलधाममनोहारी गुरुभावविलस्थितिः ।
स्थूलप्रभाववद्भोगैर्विभवौचितः ॥

धामशब्देन देहस्तेजश्च ।

इति श्रीजिनदत्तसूरि० कविकल्पलताप्रताने तृतीये वर्णनस्तबकस्तृतीयः ॥

---

## अथाऽद्भुतविधिः ।

यत्र लिङ्गविभक्तीनां सति भेदे महत्यपि ।
दृश्यते शब्दसादृश्यमिदमद्भुतमुच्यते ॥ ८० ॥
णिनन्तैः स्त्रीकृतैः शब्दैरोसि क्लीबस्त्रियोः पुनः ।
तैरेव रेफपृष्ठस्थैः स्त्रीकर्मवद्भुता भवेत् ॥ ८१ ॥

णिन्प्रत्ययान्ताः शब्दा राजिन् भ्राजिन् शाकिन्-इत्याद्याः 'स्त्रीलिङ्गे ङयन्ताः' इति सूत्रेण ईप्रत्ययान्ता क्रियन्ते, तेषामपि रेफादिशब्दा रागरवप्रमुखाः प्रयोज्याः । एवं नपुंसकलिङ्गे ब्रप्रत्ययान्याः स्त्रीलिङ्गे सिप्रत्ययान्ता णिनन्ताः शब्दा भवन्ति । यथा—

प्रभावराजनीरागोल्लासप्रवर्तिनी स्यात् ।
श्रीजिनस्य पदाब्जे च कुरुतां सम्पदः ॥

वाणीविशेषणे लिः स्त्रियां, पदाब्जविशेषणे नपुंसके, छत्रसम्पद्विशेषणे कर्मणि स्त्रियां यत् ॥

विशेषणपरिक्षिप्तैरन्यन्तैः रेफपृष्ठगैः ।
द्विस्थद्विपञ्चमीकर्मस्त्रीबहुत्वेऽद्भुताऽद्भुतम् ॥ ८२ ॥

आम्पदैः ऋकारान्तैरकारान्तैः स्थितिपञ्चमीविशेषणैरेष्टिभिः क्षिप्ते रेफपृष्ठस्थे रेफादिरागरसरवप्रमुखशब्दैः अद्भुताद्भुतं काव्यं भवति । परं विशेषं द्विस्थोभयपदधातोरर्थे द्विपञ्चमीपञ्चम्याः परस्मैपदद्विवचनान्ताः आत्मनेपदैकवचनान्ताः कुरुतां तनुतामित्यादि । एवंविधक्रियायां कर्मणि स्त्रीलिङ्गबहुत्वयुक्तं विशेषणं क्रियते । यथा—

भवभेदपद रागव्याप्तभानुस्थितीःरयात् ।
प्रमोदपदयोऽद्भुती च कुरुतां वः श्रियं श्रियः ॥

यत्रत्रयस्य विशेषणे षष्ठोः स्थितेश्चाग्रे पुंलिङ्गे सिः । अङ्घ्र्योर्विशेषणे पुंलिङ्गे सिः । याः श्रियः इति कर्मविशेषणे स्त्रीलिङ्गे शस् ।

रामः स्तोमभिदां पातु रविचन्द्राविवाङ्घ्रिणाम् ।
स्वगुरुयो जिनराजस्त्वगुर्ता लक्ष्मसम्पदम् ॥
स्मेरपुष्करोविष्णू राजन्यकृतशेखराः ।
कृपाणस्तव हस्तौ च कीर्ति पितनुतां श्रियः ॥

एवमन्येऽप्येतत्प्रविभक्ताः शब्दा लिख्यन्ते । शुचि स्थिति रवि मञ्जु साधु वल्गु चारु पटु इत्याद्या अजन्ताः, रेफादयः—रवि रश्मि रथ रक्षा रक्षः रसा रजः रहः रज्जु रस रत रमणीय रचित रहित रिपु रिक्त रुचि रुजा रुचिर रोचित रेखा रव राजीव राशि रोम राग रामा राजी रीति रूप रथी रेखा रोग राम ॥

विपयाः सनान्तस्वरनिस्वरतुमत्ययान्तलीलाभिः ।
धातुचतुष्टयैकवचः पुरस्थनमलैर्द्वितादुभुतं भवति ॥ ८३ ॥

ये शब्दा उकारान्ताः प्रथमाबहुवचने वान्ता यान्ताः सन्तोऽर्थं मिलन्ति तैः शब्दैरेकत्वबहुत्वयोः साम्यम् । उकारान्ताः शब्दा यथा—तरु कुरु भीरु विभु प्रभु इत्यादिकाः, शुचि रुचि राजि नाभि सुरभि इत्यादि, एते जसि निष्पन्नाः । यथा-शोभितरवो वनप्रदेशा इव भावनः । एवंशब्दाः—सदारङ्कुरवः, अधिकविभवः, लोलरसनः, बहुरुचिरसाधवः, अधिकद्रवः । अथ इकारान्ताः शब्दाः—अनेकपशुपयो भूपाला इव देशाः । शोभितरत्नयः, उच्चक्रोधराजयः, ज्ञातवेदनामयः, सदाउरसयः, रमतिमयः, अधिभूमयः, परमलनयः, भयोनयः, अधिभूरयः, भोगिरयः, स्वच्छत्रशालयः, तारकालयः, शुभकेरावलयः, तारकेलयः इत्यादि शब्दा ऊह्याः ।

सनान्ता इति । ये शब्दाः सान्ता नान्ताश्च त एव सनहीना अकारान्ता अर्थे मिलन्ति तेषामग्रे प्रथमैकवचनेन एकत्वबहुत्वयोः साम्यम् । यथा—महत्प्रभृतिकाः सान्ताः, सद्मन्प्रभृतिकाः नान्ताः शब्दाः । सहीनो महशब्दः । नहीनः सद्मशब्दः । सह मा लक्ष्मीर्यस्य स सलक्ष्मीवाचकः शब्दः । परमदारचिरिव सत्पुरुषाः । परमताराः देशा इव धनुर्धराः । बहुतराः, निबिडतमाः, पुरोगमनाः, विलसद्‌वाः, बहुधावद्‌नाः, पुरोपच्छदनाः, कृताकदनाः, बहुक्षोमदनाः, बहुस्वस्थानाः, कृतबहुधानाः, परमच्छान्ताः, रम्यानेकपानाः, विशदच्छनदानाः, परमानाः, बहुधनदानाः, लसमानाः, शोभितानाः, सम्पन्नयानाः, कलितस्वानाः, अधिकवचाः, कलशमनाः, बहुदमनाः, सम्पन्नमनाः, सदयाः, सदम्भाः, स्मेरदुच्चैरम्भाः, वरदुर्धरजाः, बहुस्वर्णाः, प्रगुणितवेधाः, इत्यादि शब्दा अन्येऽप्यूह्याः । अथ नान्ताः—विलसद्राः नागवर्ग इव पुण्यपुरुषाः । अनुल्लङ्घितसीमा जलधिरिव सत्पुरुषाः । परमेतेषां नान्तानामग्रे विसर्गलोपार्थं घोषवन्तः स्वराश्च प्रयोज्याः । एषां सान्तनान्तानामग्रे ये वकारादिकाः शब्दास्त एव वकारं विना स्वरादिकाश्च विशिष्टाः वर्णं वेला वार्ता अशिष्टा सर्ण एला भार्तप्रभृतयोऽर्थे मिलन्ति ते शब्दाः प्रयोज्याः । पुंलिङ्गे एकत्वबहुत्वेषु साम्यम् । यथा-परमहाविशिष्टेन राघवा इव सर्सर्पि-

गणाः । अथ वादिका शब्दाः—वनमाली विनायक वनगाहि वर्द्धमान वक वारण वार विश्रमोदित वासना वोरण विचकिल विलाभोग वर्य वधस्थान वंश वर्जन वालि वीजन वरुण वदन दाम वालानोदित वञ्चन वन्ध वार्य बाल वाल विरूप विभाभोग वध वन वृषभ वात वरोचित वक्ष वन्हि वर वल वासर वरण वाटी वाह वाद्य वक्षः वेधः वन्ध-नाश वलि वेप इत्यादि ।

सस्वरनिस्वरा इति । ये शब्दाः सस्वरा निस्वराश्च भवन्ति तैः प्रथमैकत्वबहुत्वयोः साम्यम् । यथा—द्वार् रज् भास् पङ्केरुह् क्षितिरुह् ईदृश् कीदृश् । काव्यं यथा—

लोकालोकलसद्विचारविदुरो धिस्पष्टनि.श्रेयस-
[illegible]द्वारः सारगुणालयस्त्रिभुवनस्तुत्याङ्घ्रिपङ्केरुहः ।
शश्वद्विश्वजनीनधर्मविभवो विस्तीर्णकल्याणभा
नाथोऽन्योऽपि मुदं जनस्य ददतां श्रीतीर्थराजः सदा ॥

मान्तानां शब्दानामपि विशेषणतया प्रथमाबहुत्वैकत्वयोः साम्यम् । यथा—विलसमानः कायस्थामान इति । तथा सान्तानामप्यर्थे मिलति । यथा—यद्वा-श्रितसारसे सुकविप्रबन्ध इव भीष्मपान्थाः ।

तृप्रत्ययान्ता इति । तृच्तृन्प्रत्ययान्तानां शब्दानामपि प्रथमैकत्वबहुत्वयोः साम्यम् । यथा—प्रसम्पद्वोद्धारः सैन्यनिवेशा इव देशाधिपतिः । सम्पद्वोद्धारः, सर्वदातारः, वसुधातारः, सत्त्वदातारः, मृगयातारः इत्यादि ।

धातुचतुर्थ्येकवच इति । धातोरपि चतुर्थीहस्तनीविभक्तेरेकवचनम्, तदपि नकारादयो मकारादयो वा स्वकारादयो वा शब्दाः प्रयुज्यन्ते, एकत्वबहुत्वयोः क्रिया भवन्ति । यथा—अभवन्निशान्तम्, अराजन् महान्, अपचाशीलया ॥

न्युपसर्गशब्दपृष्ठगराजी तुल्यैर्विशेषणान्त्यैः ।
अन्ते क्रियाविशेषणसारैः काव्यं महाऽद्भुतं भवति ॥ ८४ ॥

न्युपसर्गाः निहित निमग्न निरुद्ध इत्यादिशब्दास्तेषां पृष्ठस्थितैः राजिराजी, धूलि-धूली, शालिशाली इत्यादिशब्दैरन्ते निकामं नितान्तमित्यादिक्रियाविशेषणसारैः स्त्रीलिङ्गे प्रथमैकवचनेन पुंलिङ्गे प्रथमाद्विवचनेन नपुंसकलिङ्गे प्रथमाबहुवचनेन महाद्भुतं काव्यं भवति । यथा—

स्फुरितक्षमापितपाकोनिहतप्रत्यूहसंशयं मायया ।
मूर्तिकमौ महांसि प्रभवतमुदितं वरं दातुम् ॥

एकत्वे प्रभवतिक्रियासमभिहारो, द्वित्वबहुत्वयोः पक्षे कर्तृपदसम्बोधनम् ।

रुचिराव सुप्रभाव दाव पाव विभाव हाव मञ्जुलावेत्यादीनां वान्तानामग्रे अनिबद्धार्थैः शब्दैर्महाद्भुतं काव्यं भवति । यथा—

सुप्रभावानिबद्धोऽवत्पुण्यप्रभावनियोगतः ।
मूर्तिक्रमौ वचांसि श्रीजिनेन्द्रोर्जनतुष्टये ॥

अन्त्यन्तानामग्रे—हरेण उरसिकोऽपि उरूपभोगेत्यादिशब्दैर्महाद्भुतं काव्यं भवति । यथा—

वदने पादौ वाचस्तव जिन ! हर्षचौरणाय दुरितानाम् ।
विमलतनू रसिकोऽपि स्मरति मुहूरूपभोगार्थम् ॥

अन्त्युपधसान्तैरन्त्यान्तैश्चार्थद्वयेऽपि वर्तमानैरमहर्षेरित्यादिशब्दैर्महाद्भुतं भवति । यथा—

निहतजटायूवक्षस्कन्धौ विद्यानां तर्जय स्वमपि ।
समयमायातो रामः प्रभवतमुदितं रणं कर्तुम् ॥

जटायुशब्दः सान्त उकारान्तोऽप्यस्ति । रक्षोविशेषणे नपुंसकलिङ्गे प्रथमायाः एकवचनम् । स्कन्धयोर्विशेषणे द्वितीयाद्विवचनं पुंलिङ्गे । स्त्रीलिङ्गे विद्यानां विशेषणे द्वितीयाबहुवचनम् ।

वञ्चितादिशब्दपृष्ठे आकारान्ताः शब्दाः प्रयोज्या महाद्भुतं भवति ।

मुखाम्भोजं कुचौ क्रीडा सप्रभावञ्चितधिया ।
राधाया यमुनातीरे विष्णोः सुखसमृद्धये ॥

मुखाम्भोजं सप्रभावं, कुचौ सप्रभौ, अग्रे अञ्चितधिया, क्रीडा सप्रभा । रुचिरावञ्चितधियावद्—इत्यादि ॥

ऊसाधितराजितसमपादाग्रगैरवमुखः शब्दैः ।
भवति तृतीयविभक्तिरपद्यार्थैरद्भुतं काव्यम् ॥ ८५ ॥

ऊसाधितराजितादिपदानामग्रे स्थितैर्वेणीविचकिलवत्सादिभिरवमुखैस्तृतीयाविभक्त्यन्तैः स्त्रीलिङ्गे प्रथमाया एकवचनेन पुंलिङ्गे प्रथमाद्विवचनेनाद्भुतं भवति । यथा—

हृद्यावलिविलासेन मध्यश्रीरिव योषितः ।
कपोलाविव नागस्य श्रियं धत्ते मदद्युतौ ॥

गाढ इत्येङ्गतौ । यथा—वनप्रदेशाविव शोभितावेणी, विलासेन स्त्री । वनपक्षे एणीशब्दः । स्त्रीपक्षे वेणीशब्दः । प्रावृण्मासाविव शोभिता विचकिलमालया स्त्री । राजपक्षे हट्टश्रेणीव शोभितावत्समालाभिर्भटौ । शोभित राजित मण्डित द्योतित-इत्यादि, पदानामग्रे वनमालिविनायकवदनादिशब्दाः पूर्वं लिखिताः योज्याः ।

द्विपामीकारान्तशब्दैः प्रथमाबहुत्वसाधितैरर्थे मिलति एकत्वबहुत्वयोः साम्यम् । यथा—पाल्य कल्य मालिन्य राज्य सशोभमान्ये सशोभनवाक्य अधिकवर्यः सख्यः मत्यः सत्यः छिद्रतरैव विमर्दवकन्यः धार्यैः सद्यैः दास्य सम्पद्यवाद्भ्य इत्यादि । तथा—

वनमिवोल्लासितश्रीकवयो नृपसभाप्रदेशाः । नपुंसके एकवचनम् । पुंसि बहुवचनम् । वैश्वानरा इव तेजोनुगतरविरवयो गात्रम् । अश्वकुलमिव यः शोभिततरः । प्रबलतमाः सेनाः प्रदोषवत् ।

शोभितादिशब्दानामग्रे निपातनिदाघनिकेतननिचितादिशब्दाः स्थाप्याः स्त्रीलिङ्गे एकवचनेन स्त्रीपुंनपुंसकलिङ्गेषु बहुवचनेन साम्यं भवति । शोभितानिखिलविभवेन । मण्डितानिचितदानेन । राजितानिकेतनैरित्यादि । शोभिता राजिता खण्डिता मण्डिता शोभितादिशब्दानामग्रे प्रयोज्याः शब्दा यथा—निखिल निधन निरय निदान निधानं निपात निदाघ नियंति निकुञ्ज निलय निःश्रेणि निवसन निचित निशान्त ।

ईकारोपधाऽऽकारोपधनकारान्ताः पीनहीनादिमानमानादयः शब्दा इकारान्ताः क्रियन्ते नपुंसलिङ्गे एकत्वबहुत्वयोः साम्यं भवति । यथा—अधिकपीनि वनानीव कुलम् । विशदहीनि बिलानीव कुलम् । परमहासमीनि वनानीव समुद्रजलम् । तथा परमस्थानि वनानीव विप्रकुलम् । स्वच्छतानि बहुवर्णस्थानानि परमध्यानि सुसम्पद्दानि परमदानि बहुधानादानि मञ्जुलयानि पीन हीन मीन पाठीन शालीन अध्वनीन ईशान प्रस्थान इत्यादि ।

धाजादानामाराद्धाक्षा एषां चाऽऽकारान्तादिशब्दानामग्रे तृतीयैकवचनेन श्लेषः । सदाक्षयाऽन्वितः । सदारजयान्वितः पुरोगदयाऽन्वितः । बहुधानयान्वितः । सदादेशनयाऽन्वितः । सदारम्भयान्वितः । बहुधारयान्वितः । स्फुटमेहलयान्वितः । अथ बाहुयाधः । बाहाशब्दो भुजवाची आकारान्तः । सत्वरक्षयान्वित इत्यादि ॥

सनकारान्तैः शब्दैः सिसाधितैः पुंस्त्वनियुक्तैः ।
अग्रे क्रियाविशेषणकृतावमुखशब्दतोऽद्भुतं भवति ॥ ८६ ॥

महत्प्रमुखसान्तशब्दैः सधन्वप्रमुखनान्तशब्दैरग्रस्थक्रियाविशेषणस्थवरवत्ववाहिसाधवमुखरयुक्तैः पुलिङ्गे त्रिभिर्वचनैरद्भुतं भवति । यथा परमहाश्वम् । विलसप्रावाहिवभसरम् । अस्यार्थो 'विवया' इतिसूत्रे प्राक् सनान्तप्रस्तावात् सविस्तरः प्रोक्तः ॥

दीर्घादिनान्तशब्दैः स्त्रियां द्वितीयैकवचनकृतवचनैः ।
अर्थे मिलति च सान्तैः षष्ठीबहुवचनतोऽद्भुतं भवति ॥ ८७ ॥

दीर्घादिनान्तशब्दैः स्त्रियो द्वितीयैकवचनेन साधितैरपतः स्यिति विप्रदित्यादि विप्राणैः षष्ठीबहुत्वेन साम्यादद्भुतं भवति । यथा—मृदूनां स्यिति विप्रदित्यादिशब्दाः । तथा सकारान्तशब्दैर्व्यञ्जनान्तैःकारान्तैश्च द्वितीयैकत्वषष्ठीबहुत्वयोः साम्यम् । यथा—सारसां स्यिति पद्न्, परमहसां स्यिति विप्राणः ।

तथा श्लेषविशेषणे पुंसि स्त्रियां च व्यञ्जनान्तानां शब्दानामग्रे असशसूहसिकसां साम्यम् । रेफनिमित्ते वसोरपि साम्यम् । यथा—गुणभृतो रयात् । अप्रासो मुक्त्वा श्रांबेऽपि यथा—शुभायायो रसात् ।

तथा—एर् मृन् मृदूषा ये भकारान्ता व्यञ्जनान्ताश्च शब्दास्तेषां पुरतः रोरपि साम्यम् । यथा—गुणभृतो रयात् । भकारान्तपक्षे सिः, श्लेषविशेषणे स्त्रियाम् ।

आकारान्ताद्घोषवति निमित्ते सिजस्शसां पुंस्याकारान्तात् सिजस्शसां पुंस्यकारान्ताज्जसः साम्यम् । यथा—सोमपा जगति । पुंपक्षे आकारान्तः । अकारान्तोऽपि जस्विषयः ।

अकारान्तविशेषणात् पुंस्त्रियोर्जसः, स्त्रियां शसः तथा घोषवति निमित्ते स्त्रियां सेरपि साम्यम् । यथा—घृतगुणा जयति ।

पुंस्यकारान्तादाकारादौ स्वरे सिङ्योः साम्यम् । यथा—वृक्ष आस्ते ।

तथा भृद्रूपशब्देभ्यः पुंस्याकारान्तात् सिङ्योः, पुंस्त्रियोर्व्यञ्जनान्ताज्जस्शस्ङसिङसां, क्लीबे ङसिङसोराकारादौ स्वरे साम्यम् । यथा—गुणभृत आदरात् ।

अकारान्तविशेषणात्पुरस्थन्युपसर्गशब्देषु निचितनिसृतरूपेषु पुंसि जसः, स्त्रियां सिजस्शसां, क्लीबे जस्शसोः साम्यम् । यथा—बहुगुणानिकामम् ।

अकारान्तविशेषणात् पुंस्यौजसोः, स्त्रियां जस्शसोर्यवलोपस्वरे साम्यम् । यथा बहुगुणा इह कामम् ।

घृद्भृद्रूपशब्देभ्यः स्त्रियां सेलिङ्गत्रये टावचनस्य साम्यम् । यथा गुणभृता, तथाभूतेयम् । एवंरूपेषु चतुर्थीसप्तम्योरपि । एवमन्येऽपि बहवः प्रकाराः संभवन्ति ते स्वयमूह्याः ॥

सर्वेत्यादिः श्लेषः । कुरुतामित्यादिष्वेकत्वद्वित्वयोः, अराजभमलेष्वेकत्वबहुत्वयोः, व्यतिभाते इत्यादिष्वेकत्वद्वित्वबहुत्वानां साम्यम् ॥

अथ स्वराणां मिथः श्लेषोपायमाह, पूर्वमकारस्याऽन्यस्वरैः क्रमेण श्लेषो यथा—

ओसि आमि जसि भ्यामि स्वरे गौणतया अआ ।

ये शब्दा अकारान्ता आकारान्ताश्च पृथगर्थास्ते औस्यादिभिः श्लिष्टाः स्युः । यथा—रामयोः रामाणाम् रामाः रामाभ्याम् । रामावगूहनम्, रामाश्लेषः, रामेच्छा, रामेप्सा, रामोद्योतः, रामोढा, रामैजनम्, रामैहिकः, रामौजः, रामौरसः, रामाञ्चनम्, रामेङ्गितम्। वल्लासितरामो लक्ष्मण इव वसन्तः, अत्र समासेन गौणता । शब्दा यथा–(राम लक्ष्मण पद्म कमल बाल शाल आधान कल कष्ट तारक अहक मालिक आलिक जर जय मुक्त कान्त प्रिय सित दक्षिण दोष अञ्जन सून वासन रसन प्रवाल प्रकार प्रमद प्रवीण प्रथम शिव ओत वत्स घा गोत्र रस कूल क्षम अनन्त पिङ्गल पावन आर्द्र बकुल तार कील सदारम्भ काष्ठ विनत निकष पद करण घट कक्ष उत्फुल्ल हाल विरेह आर निर्वीर विधर निष्कल श्रवणादयः) ॥

अइ अप्रस्वरैकेण इनाप्रगसमासतः ॥ ८८ ॥

अकारेकारौ सप्तम्येकवचनपुरःस्थोक्तादिशब्देन, तथा इनपुरःस्थसमासेन तथा ङिप्रत्ययेन श्लिष्टौ भवतः । यथा सुबुद्धेरविकल्पितिः । आकारान्तपक्षे सप्तमी, इकारान्तपक्षे पञ्चमी षष्ठी वा । सुबुद्धिविशोभितः । अकारान्तपक्षे सुरभासी सुरभ सुरभ्रुवोऽस्यास्ति इति इन् । इत्येवमन्यत्रादयः । "सर्वादिर्नित्यमिन् इन्द्रनिन्दितरोगिभ्यः" इत्यादिना इन्प्रत्ययविधेया । यथा सुदवक्रीभूतार्थः । शब्दा यथा–(सुद मिद प्रवन नियत मन पत्र मल रत सगत जात कान्त वन प्रस्तुत शान्त उपत्र सापन सुमेत धात मनजीव अवध इत नाग अचल अटल निन्द प्रसून अभिजात हर भर भवन

भृत चल वल ग्रन्थ प्रबोध अनेक पक्षतः आट सदा पद्धत काश सूर दुर्विध दीस रिष्ट गुरुतर वार कर कट शाल सुष्ट श्रुत वर्द्धक) इत्यादयः ॥

अई च्विप्रत्ययाद्गौणौ

अकारेकारौ च्विप्रत्ययेन गौणौ श्लिष्टौ भवतः । यथा—महीकृतश्रीः । गौरीभूतस्थितिः । अकारान्तपक्षे पञ्चमी षष्ठी वा च्विः । शब्दा यथा-(मह गौरव रसा रवि पद्म वल्क सल्लक पांशुल वल्ल मल्ल दर गुरुतम वसतम तन्त्र नन्द वेद वाप सरस भवन बहुतर काल ताल हरिताल कवल कोष्ट बिम्ब मागध माधव कर्कट कीर अर्जुन कुट कुम्भ वर्द्धन भास्वर चार सवगर नील बाण चण्डाभ सदानिभ ऐरावत शृङ्ग निष्कुट शम कुश कर्कर मन्मथ सदा संमुख कुण्ड तुण्ड पारतन्त्र्य समुलकूबर सदामल्लघोरण वैजयन्त तीर एकावल अक्षर आढक सदातुवर पिप्पलेत्यादयः) ॥

रेफद्वष्टसिना अउ ।

अकारोकारौ प्रथमैकवचनाग्रस्थरेफादिशब्दैः श्लिष्टौ भवतः । यथा-वटोरम्यः । उकारान्तपक्षे पञ्चमी षष्ठी वा । शब्दा यथा—(पट कट रङ्कु काक सशङ्कु वर चार केत कन्द वरत्रप दार तर्क थाह शुम्भ मय बहु मर सदा उड्डु गोमया भूरिमाय उत सदाकार सक्तु पर मध स्तन प्रभ जराय अवट अन्ध तालेत्यादयः) ॥

अऊ उवत् कृतक्लीबविशेषणतया तु ऊ ॥ ८९ ॥

यथा-अकारान्ता उकारान्तास्तथा ऊकारान्ताः पूर्वं क्लीबविशेषणत्वेन उकारान्ताः क्रियन्ते, तत उकारविधिना श्लेषः । यथा-अतिवधोरम्यतरः प्रकारः क्रूरान्तरारिषु स्वस्मानो मुनिमण्डलस्य । ऊकारान्तपक्षे अविक्रान्ता वधूर्येन मुनिमण्डलेन तदतिवधु, तस्याऽतिवधोः । शब्दा यथा-(आग आलाव यवाग परमन्द अधिभ प्रतिभ पुनर्भेत्यादयः) ॥

अए डौ

अकारैकारौ सप्तम्येकवचनेन श्लिष्टौ भवतः । एकारान्तशब्दानामबाहुल्यादकारसहितपूर्वाक्षराः शब्दा अर्थे मिलति प्रायाः । यथा-अधिकेवलसंस्थितिः । परेदम्यसल्लक्ष्मीः । अकारान्तपक्षे सप्तमी । शब्दा यथा-( भेक केवली केलि केतु केश केदार केसर प्रमेलकादयः ) ॥

द्वष्टरेफेण भिसा गौणतया अए ।

अकारैकारौ तृतीयाबहुवचनेन पुरःस्थसमासैकादिशब्दैः श्लिष्टौ भवतः । यथा-सदासपरैरम्यः । ऐकारान्तानामल्पबाहुल्यादैकारसहितपूर्वाक्षराणामैकाराग्रस्थरेफाणां शब्दानामर्थे मिलति ग्रहणम् । यथा—कैरवभैरवादयः । सिद्धपोपवदाचैर्न सन्धिः, संहिताया अभावेन विरामविवक्षणाद्विसर्ग एव ॥

अऊ

अकारौकारौ प्रथमैकवचनाग्रस्थपोररत्पूर्वाक्षरयकारादिशब्दैः श्लिष्टौ भवतः । यथा-सरोधर्दधोः । अकारान्तपक्षे सिः । ढकारान्तानामल्पबाहुल्यादौकारसहितपूर्वाक्षराणाम् ओकाराग्रे अक्षरपोषयुक्तानां पुत्रानां शब्दानां ग्रहणम् । यथा—कौरक गोलक चोलक

मयोधस्थितिरित्यादौ उकाराग्रे अकारः । कोयष्टिः कोदण्डः कोद्रवः उच्चंक्रोधवदित्यतिः कोलसलक्ष्मीः पोगण्ड गोधन इत्यादौ उकाराग्रे घोषवन्तः । पुरोधोतः, अधिकोपगतः इत्यादौ जसिः । पक्षद्वयेऽपि समास उद्योतार्थैः ।

उलीलया श्रउ

अकारान्ता उकारान्ता यदा तदा पूर्वं क्लीबविशेषणत्वेन उकारान्ताः क्रियन्ते, तत उविधिना श्लेषः । यथा-अत्यासन्नोरुचिरः स्यात्तुरयः कुलस्योदयः । पक्षे अतिक्रान्ता आ सामस्त्येन सत्रौर्येन कुलेन तत् अत्यासन्नु, तस्याऽत्यासन्नोः । एवं धीः । एवमन्येऽपि ॥

गौणत्वे आ अवत् ॥ ९० ॥

आकारान्ताः शब्दाः पूर्वमन्यविशेषणत्वेनाऽकारान्ताः क्रियन्ते, पश्चादकारविधिना सर्वस्वरैः श्लेषः । इकारेण यथा—पुरे प्रचुरशाले रम्यता शारदेऽशास्येव । शालापक्षे सप्तमी । शालिपक्षे पञ्चमी षष्ठी वा । शब्दा यथा—(शाला सन्धा विनता प्रहेला हेला बहुलाला परमहाला महाशोला मुक्ता कान्ता कलेत्यादयः) । इकारेण यथा—(पटा बहुलाला परमहाला दरुचिज्वाला महाशाला ) इत्यादयः । बहुलालीभूतः । उकारेण यथा—(मन्या सूना कन्या चला त्रपा अम्बा मृगयादयः) । भूतप्रयोरम्यः । ऋकारेण यथा—(भा प्रतिभा अधिभा पुनर्भा कच्छादयः) । अतिभोरम्यः प्रचारः । स्वधृत्यधिकृन्दस्य ॥

क्विना आमि उसि स्वरे इई ।

इकारेकारौ क्विप्रत्ययेन तथा आम्ङस्भ्यां तथा स्वरैश्च श्लिष्टौ भवतः । यथा-सद्रावलीभूतः । सद्रावलीनां सद्रावल्व्योः सद्रावल्व्यनुगतादयः । शब्दा यथा—(अवि महाशालि अधिकालि प्रचुरालि नन्दि आलि मलिरलीत्यादयः) ॥

इउ ङौ

इकारोकारौ सप्तम्येकवचनेन श्लिष्टौ भवतः । यथा-विधौ प्रीतिः । शब्दा यथा-(अणिहेति कटितरि सहारि शारि इचवारि सद्राद्रिप्रभृतयः) ॥

क्लीबवृत्तित्वे इऊ उविधिना तथा ॥ ९१ ॥

इकारोकारौ यदा क्लीबे तदा ऊकारान्ताः क्लीबविशेषणत्वेन उकारान्ताः क्रियन्ते, तत उविधिना श्लेषः । देधापि विशदवधो कुले ॥

एए ङसिङसौ रेफे

इकारैकारौ पञ्चमीषष्ठ्येकवचनेन गुरुपरेकादिरम्यप्रगुरुशब्देन श्लिष्टौ भवतः । यथा—सद्रासेरम्यः । एकारान्तशब्दानामभावात्सेशब्दः कल्पितः । इना सह वर्तत इति सेः, सकाम इत्यर्थः । सद्रासेरभसाटोपः ॥

ङौ य्वलोपिस्वरे इए ।

इकारैकारौ सप्तम्येकवचनेन य्वलोपिस्वरे श्लिष्टौ भवतः । यथा-सद्राता भायेयः भरिरैः ॥

सम्बोधनसियोगेन य्वलोपिस्वरे इऊ ॥ ९२ ॥

इकारोकारौ सम्बोधनप्रथमैकवचनेन यवलोपिस्वरे श्लिष्टौ भवतः । यथा कट इह । कटि कटु ॥

इओ ङौ

इकारौकारौ सप्तम्येकवचनेन यवलोपिस्वरे श्लिष्टौ भवतः । यथा—सदाशनौरतः ॥

क्लीबवृत्तिश्चे ई इवत्

ईकारान्ताः क्लीबविशेषणत्वेन इकारान्ताः क्रियन्ते, तत इवत् सर्वस्वरैः श्लेषः । इकारोकारेण यथा—स्वीकृतपटी मित्रे प्रीताः । शब्दा यथा—( तनी अपटी कटी वटी सप्तावटी तरी चीी करी चारी वारी दारी, उकारेण तनी तनू भी भू ) प्रभृतयः ॥

तद्विधा ऊः ।

तस्य ईकारस्य धीस्तद्वोस्तथा ऊकारान्ताः क्लीबविशेषणत्वेन उकारान्ताः क्रियन्ते, तत उविधिना सर्वस्वरैः श्लेषः । ऊकारान्तौ च्विप्रत्ययेन वा श्लिष्टौ । तन्नूकदूप्रभृतयः ॥

अम्प्रयोगादनुस्वारः

द्वितीयैकवचनेनाऽनुस्वारश्लेषो भवति । यथा—अधिकंबलं वहन्, रुचिरांगणश्रियं बिभ्रत्, पुरोगागेयरुचिं दधत् ॥

विसर्गः श्रीसमैः पुरः ॥ ९३ ॥

श्रीस्थितिप्रायैः पदैः पुरस्थैर्विसर्गश्लेषो भवति । यथा—पराणश्रीः, महस्थितिः ॥

स्यादि-त्यादिविभक्तिश्लेषो, भाषाश्लेषः, प्रकृतिश्लेषोऽपि भङ्गश्लेषोपायेन साध्यः । विभक्तिश्लेषो यथा भवति । पक्षे—भवति रोहितः । पक्षे—भवेन तिरोहितः । स्यादिपक्षे विभक्तीनामलोपः समासेन लोपो वा क्रियते । भवतः । स्यादिपक्षे तस दिवतो वा । एवं सर्वत्र ज्ञेयम् । भवन्तिरोहिताः । भवसितवश्रीः।भवामितश्रीः। भवावस्थितया । राजतिरोहितेत्यादि ।

भाषाश्लेषो यथा—किमिव केवलं पुरवञ्चन कलिशा नाथो कथम् । एवंविधे भाषाश्लेषे समसंस्कृतप्राकृतादिशब्दाः प्राकृतलक्षणेन ज्ञेयाः । यथा—सरमयहरिणनरकुलेश्याद्यः ।

प्रकृतिश्लेषो महःस्थित्यादयः । एवमष्टविधोऽपि श्लेषः प्रपञ्चितः ॥

श्लेषभेदो यथा—

वर्णभाषालिङ्गपदप्रकृतिप्रत्ययैस्तथा ।
विभक्तिवचनाभ्यां च श्लेषः सञ्जायतेऽष्टधा ॥९४॥
कल्पवर्योऽत्र भङ्गोऽभूदाकारेकारवर्णयोः ।
स्वर्गलाभविभाऽशोभी पदभङ्गसमुद्भवः ॥९५॥
लिङ्गश्लेषे तनुर्नेत्रे पाहाः कैरवराजिनो ।
हरजमे सुरमणो संस्कृतप्राकृतोद्भवः ॥ ९६ ॥
दारिद्र्यकृद्रिपौ मित्रे कृतप्रकृतिभङ्गतः ।
गौरीभूतगुणोपेत ई च्विप्रत्ययभङ्गभूः ॥ ९७ ॥
त्यमनारत्ययथमे स्यादित्यादिविभक्तिजः ।

विलसद्रुमान इत्यत्र बहुवचनोद्भवः ॥९८॥
वर्णादीनामभङ्गे तु राजा मृदुकरस्थितिः ।
संसारसारमर्थैक्ये संस्कृतप्राकृतोद्भवः ॥ ९९ ॥

यमकोपायमाह—

समानस्वरवर्णानुप्रासतः श्लेषतस्तथा ।
स्याद्वर्णपदपादानामावृत्त्या यमकं द्रुतम् ॥ १०० ॥

अनुप्रासश्लेषोपायाः पूर्वोक्ता एव ।

हेलाविडम्बितहिरण्मयरत्नशृङ्गाः शृङ्गारभासुरभुवः सहचारिकान्ताः ।
कान्तारभूवसतयोऽत्र चरन्ति सारं सारङ्गचञ्चलदृशो मरुतां महेलाः ॥
भवति वृद्धिकृते कमलागमो जिनमतो न मतो नमतो मम ।
न रतिदाऽमरभूरहकामधुक् वरमणीरमणीरमणीयता ॥
वनस्यान्तर्लसत्यत्र रतिभूतरुचाऽरुणः ।
सरौघः स्त्रीसखो रत्नैरतिभूतरुचारुणः ॥

वक्रोक्तिविरोधाभासप्रश्नोत्तरपुनरुक्ताभासा अपि श्लेषसाध्याः । यथा—

तरणिं पश्य सुश्रोणि ! नाथ ! कुत्रास्ति नौरिह ।
सवितारं प्रिये पश्चिम पितृ ! दूरेऽधुना पिता ॥
भात्येष मेरुरुचिरोऽपि नमेरुशोभी कृत्स्नामिलामपि वहन्ननिलाभिरामः ।
सव्यालवालमपि चन्दनपादपानां नव्यालवालमभितो वहते समूहम् ॥
मूर्ध्ना वहन्ति के कुम्भौ मुग्धा शिशा मनीति किम् ।
क्रियते कुञ्जराद्यस्य किमु सम्बोधनं बुधैः ॥

गजानन ।

प्रद्योतनोऽम्बुजानां सविता महसां विकर्तनस्तमसाम् ।
निखिलजगच्चक्षुरसावम्बररत्नं रविर्जयति ॥

इति श्रीजिन० श्लेषसिद्धिप्रताने तृतीये अद्भुतस्तबकश्चतुर्थः ॥

---

अथ चित्रप्रपञ्चः ।

स्यात् स्वरव्यञ्जनस्थानगत्याकारनियन्त्रणात् ।
च्युतगूढादि वा चित्रं च्युतं तत्र चतुर्विधम् ॥ १०१ ॥
मात्रार्धमात्रयोर्बिन्दुवर्णयोश्च्यवनात्मतम् ।
क्रियाकारकसम्बन्धपादैर्गूढं चतुर्विधम् ॥१०२॥

स्वरादीनां नियन्त्रणान्नियमः स्वरचित्रम् । यथा—जय सकलजनसकलन जय मदन-मददलन जय कमलकरचरण जय समवसरणशरण । ह्रस्वैकस्वरम् । एवं दीर्घैकस्वरादिप्रयादिस्वरानियमो ज्ञेयः । एकस्वरादिशब्दाः प्रयाप्या इति न दर्शिताः ॥

व्यञ्जनचित्रं यथा—

ककाकङ्ककाङ्काङ्का केकिकेकाकुका ककुप्।
कौ कं कङ्ककोकैककाकं काककाकुकम् ॥

वर्षावर्णने ककुप् वर्तते। जात्येकवचनम्। किंभूता ककाकङ्ककाङ्काङ्का ककाः लोलाः काकङ्काः सुखागमना ये काङ्का मेघास्ते अङ्को लक्ष्म यस्याः सा। कक लौल्ये, भ्वादिरात्मनेपदी। ककन्ते ककाः पचाद्यच्, कं सुखं तद्धेतुः आकङ्क आगमनं येषान्ते काकङ्काः। ककिवकीत्यादिना, भ्वादिरात्मनेपदी ककधातुः आङ्पूर्वः। आकङ्कनं आकङ्कः, भावे घञ्। कं जलम् अङ्के उत्सङ्गे येषान्ते काङ्का जलभृतः। पुनः किम्भूता केकिकेकाकुका। केकिनो मयूराः तेषां केका ध्वनिविशेषास्तासां कुका ग्राहिणी। कुक वृक आदाने, भ्वादिरात्मनेपदी। कोकते कुका, नाम्युपधात्कः। कौ कं कङ्ककोकैककाकं, तथा कौ पृथिव्यां कं जलं वर्तते, किंभूतम् कङ्ककोकैककाकम् कङ्काश्च कोकाश्च तेषामेकोऽद्वितीयः काको रवो यत्र तत्। कङ्का पक्षिविशेषाः, स्वार्थे कः। कोकाश्चक्रवाकाः। कायति अर्थमभिधत्त इति काकः शब्दः। "इग्भीपाकाधुरवचिक्लृदाधारिभ्यः कः"। पुनः किंभूतम् काककाकुकम् काककञ्च काकुकञ्च तत्, केन आत्मना आकर्कं कुटिलमामि। अक अग कुटिलायाङ्गतौ, भ्वादिः परस्मैपदी। अकतीति आककम् ण्वुल्। काकुर्ध्वनिविशेषस्तं करोति 'अन्यतोऽपि चे'ति डः ॥

अथैकाक्षरादिशब्दाः कादिक्रमेण लिख्यन्ते। यथा—( कु ककुप् काकु क कि केका कः एकाको किं कः कौ के कान् कं का के काः कां के काः किं के किम् के। अर्कं पापादौ। काकं काकसमूहादौ। को ब्रह्मादौ। कं शीर्षादौ। काका काकजङ्घादौ। अङ्को भूषणादौ। एकः सङ्ख्यादौ। कङ्को यमादौ। काको द्विजादौ। कोकश्चक्रादौ। ककुद् राजचिह्नादौ। खमिन्द्रियादौ। खोऽर्कः। आखुर्मूषकः। गः गन्धर्वादौ। गं गीते। गौः स्वर्गादौ। अगो वृक्षादौ। अङ्गं शरीरादौ। इङ्गम् इङ्गितादौ। आगो मन्त्वादौ। आगूः प्रतिज्ञायाम्। गङ्गा गौः गाम् अङ्ग। घः घण्टीशे। घा किङ्किण्यादौ। अघं दुःखादौ। ओघः प्रवाहादौ। चश्चन्द्रादौ। चञ्चुरन्त्योत्क्यादौ। चञ्चूः चञ्चुवत्। चञ्चु-प्रत्ययश्चित्व उक्थ। चीचं वल्कलम्। जो जैत्रादौ। जुर्नभोवागादौ। सञ्जो ब्रह्मादौ। आजिर्युद्धादौ। ओजो बलादौ। अजाः आजूः। टो रवे। टं पृथिव्याम्। अट्टो हट्टादौ। आटिः अट अटात् आटीव्। डः शिवादौ। इडा भुवाङ्गनादौ। ईड स्तुतौ। णो निष्फलादौ। ईडा अणिरिवाक्षाग्रकीलादौ। अणुर्व्रीह्यादौ। ऐणः संस्कारादौ। ता श्रीः। अन्तः प्रान्तादौ। ईतिः रजन्यादौ। ऊतिः रक्षादौ। एतः आगमादौ। ततं वीणादिवाद्ये। ततो व्याप्तादौ। यातः पित्रादौ। तृट् पिपासादौ। तन्तु तुक अपत्यं आतिः। तन्तुः जलजीवविशेषे। अन्तर उतः प्रोते। ऊतः स्यूते। तत्—शब्दः तौ ते तम् तौ तान् तैः ते ताः तत् ते तत्। अति अतः प्रतिः ततिः तान्तः इति। एतौ एते एतम् एतौ एतान् एतैः एते एताः एताम् एते एताः एतत् एते तत्। थः शैलादौ। क्षय अथो। दं पत्न्याम्। दा दानादौ। दूण् भेत्रादौ। अन्दूर्निगडादौ। दिन् इन्दुः वहद्दे। दौः आदिः। इदम् अदः अदात

दे दरौ । धा धनदादौ । धुर्भारादौ । अन्धोऽक्षिहीनादौ । आधिर्मनःपीडादौ । अन्धस् धीः ऊधः अन्धु एधस् एध । धुर धानमुखादौ । अधः अधिक् । नो बन्धादौ । निर्नेतरि । नु स्तुत्याम् । नौस्तर्याम् । अन्नं भक्तादौ । इनः स्वाम्यादौ । उन्नः, क्लिन्नादौ । ना नो आनत अन्नः नुन्न नाना ननु न नो नूनम् अनु ऊनः एतम् एनाम् अनेन एनः । पः पवनादौ । पूः पुरादौ । पूः अपूपः आपं पापम् । पर्पा रविः । अपि अप पम्पा । उपा आपत् आपि । उपा निशेषे । बो वरुणादौ । विः पक्ष्यादौ । बिम्बं प्रतिबिम्बादौ । अम्बा अम्बु बिम्बी । बवयोरैक्यमिति बोऽप्यत्र । वः शिवादौ । अविर्मेषादौ । वाक् वचनादौ । विचार अव एव इव वा है आवाम् व विश् अवाक् वित् आविः विः । भः शुक्रादौ । भास् कान्त्यादौ । भं भा भूः भूस् भीः भं भा भोः इभा आभा अभि भुक् इभ भित् भाक् भो भिः आभिः एभिः भात् अभाः । मः शिवादौ । मा लक्ष्म्यादौ । मास् मासादौ । मूर्बन्धने । आमोऽपक्वादौ । अमा गौर्यादौ । मुत् हर्षादौ । इमौ इमे इमम् इमौ इमान् इमे इमाः अमू अमी अमुम् अमून् अमूः । अमा सहार्थे । मा वारणार्थे । मां मे मम अमात् । यो मारुतादौ । यं यशौ । या यानादौ । ययुर्वाहादौ । युध अयस् आयुः अये अयम् अयि आयाः यः यौ ये यम् यौ यान् यैः यया याः या ये याः याम् ये याः यया यत् ये अयात् अयाम् ययौ ययुः इयाय ईयुः । रः स्मरादौ । रीर्भ्रान्तौ । रुः सूर्यादौ । रैः धनादौ । अरोऽष्टादशो जिनः । अरम् चक्राङ्गादौ । आरो भौमादौ । आरा चर्मभेदिनी । इरा जलादौ । रुरुर्दैत्यादौ । रुक् शोभादौ । अरर अररिः द्वौ कपाटे । रिरी रीरी द्वौ आरकूटे । रुज् रे उरु अरुः ईर उर उरस् रुप राज् अरि अर अरे रे आरत आरात् अराः रौ रुरुः रमे आर आरुः । ल इन्द्रादौ । ल्लीने । ली श्लेषादौ । अलिर्भृङ्गादौ । आलिः श्रेण्यादौ । आलुः कन्दादौ । इला भूम्यादौ । लीला विलासादौ । लोलश्चलादौ । लोला जिह्वादौ । ईली दात्री उलूलः आलुः कापथिका । अलम् हरिताले निरर्थे च । लाला अलिन् अल वृश्चिकपुच्छदण्डिका लुलन् ललन् पुला अण्डल आलप्रत्ययौ एड आली लाली एल अलात अलु लली ललुः लले । डलयोरैक्यमिति डोऽप्यत्र ज्ञेयः । शं शुभे । शा सान्त्वायाम् । शी शयने । शुर्विधौ । अंशुः किरणादौ । आशा दिगादौ । आशुर्ब्रीह्यादौ । ईशः शिवादौ । शशाशशी अंशः । आशीः मङ्गलवागादौ । शुक् शिशुः । ईशा हलदण्डे । आशु । षः श्रेष्ठे । षू गर्भविमोक्षे । उषा निशादौ । उषः सन्ध्यादौ । ईषा । सः परोक्षे । सा लक्ष्म्याम् । सत् अंस असून् सीस सत् असु असिः सी सा असौ आसन् आसीन् आसे । हो हस्तादौ । अहिः सर्पादौ । ईहा स्पृहादौ । अहः हाहा हुहू ऊह हर् अंह हृत् हे है अहो हं हो अहह ह हाहा आह आहुः । एवमन्येऽप्यूह्याः ॥

अः कृष्ण आ स्वयम्भूरिः काम ईं श्रीरीश्वरः ।
उ रक्षणे ऊश्च सेथे देवदानवमातरौ ॥ १०३ ॥
लृर्देवसूर्लृवाराही भवेदेर्विष्णुरैः शिवः ।
उर्वेधा ऊरनन्तः स्यादों ब्रह्म परमः शिवः ॥ १०४ ॥

को ब्रह्मात्मप्रकाशार्ककेकिवायुयमाऽग्निषु ।
कं शीर्षेऽम्बु सुखे कुस्तु भूमौ शब्दे च किं पुनः ॥ १०५ ॥
स्यात् क्षेपनिन्द्ययोः प्रश्ने वितर्के च खमिन्द्रिये ।
स्वर्गे व्योम्नि नृपे शून्ये सुखे संविदि खो रवौ ॥ १०६ ॥
गस्तु गातरि गन्धर्वे गं गीते गौर्विनायके ।
स्वर्गे दिशि पशौ रश्मौ वज्रे भूमाविषौ गिरि ॥ १०७ ॥
जलेऽक्षिण घस्तु घण्टीशे घा किङ्किण्यां वधे ध्वनौ ।
ङस्तु भैरवविषयेच्छुयोश्चन्द्रचौरयोः ॥ १०८ ॥
छः सूर्ये छेदके छन्तु निर्मले जस्तु जेतरि ।
विगते जूर्जगोधाचि पिशाच्यां जवनेऽपि च ॥ १०९ ॥
ञो नष्टे गायने चासद्वचने घर्घरध्वनौ ।
टं पृथिव्यां करङ्के च टो ध्वनौ ठो महेश्वरे ॥ ११० ॥
शून्ये बृहद्ध्वनौ चन्द्रमण्डले डं शिवे ध्वनौ ।
त्रासे ढा निर्गुणे शब्दे ढक्कायां णस्तु निष्फले ॥ १११ ॥
ज्ञाने तस्तस्करक्रोडपुच्छयोस्ता पुनः श्रियाम् ।
थो भीत्राणे महीध्रे दं पत्न्यां दा दातृदानयोः ॥ ११२ ॥
छेदे बन्धे च धा गुह्यकेशे धातरि धीर्मतौ ।
धूर्भारकम्पचिन्तासु न पुनर्बन्धबुद्धयोः ॥ ११३ ॥
निस्तु नेतरि नुः स्तुत्यां नौस्तर्यां पस्तु पातरि ।
पवने जलपाने च फो झञ्झाऽनिलफेनयोः ॥ ११४ ॥
फुस्तु फूत्कारे निष्फलभाषणे बः प्रचेतसि ।
कलशे विः खाण्डजयोर्भमुडौ भोऽलिशुक्रयोः ॥ ११५ ॥
भा कान्तौ भूर्भुवि स्थाने भीर्भये मः शिवे विधौ ।
चन्द्रे शिरसि मा माने श्रीमात्रोर्वारणेऽव्ययम् ॥ ११६ ॥
मूः पुनर्बन्धने यस्तु मातरिश्वनि यं पशौ ।
यस्तु यातरि खट्वाङ्गे याने लक्ष्म्यां च रो ध्वनौ ॥ ११७ ॥
तीक्ष्णे वैश्वानरे कामे राः स्वर्णे जलदे धने ।
रीर्भ्रमे रुर्भये सूर्ये ल इन्द्रे चलनेऽपि च ॥ ११८ ॥
लू लवे ली पुनः श्लेषे वलये वो महेश्वरे ।
वरुणे मारुते वः स्यादौपम्ये पुनरव्ययम् ॥ ११९ ॥
शं शुभे शा साक्षायां शीः शयने शुर्निशाकरे ।
षः श्रेष्ठे षुः पुनर्गर्भविमोचे सः परोक्षके ॥ १२० ॥
सा लक्ष्म्यां हो निपाते च हस्ते दारुणि शूलिनि ।
क्षः क्षेत्रे रक्षसीत्युक्ता माला शास्त्रसूरिसम्मता ।
नाम्नामेकार्थनानार्थैकाक्षराणामियं मया ॥ १२१ ॥

धूर्यानवदने भारे पूः शरीरे पुरे तथा ।
दृग् द्रष्टृदर्शनेऽप्यक्षिण विट् प्रवेशे सुवैश्ययोः ॥ १२२ ॥
तृड् लिप्सायां पिपासायां भा प्रभावे महस्यपि ।
मास्तु मासे विधौ चैते युक्पादान्तोपयोगिनः ॥ १२३ ॥
अकं दुःखाघयोरङ्को भूषारूपकलक्ष्मसु ।
चिह्नाद्रौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागमे ॥ १२४ ॥
एकोऽन्यः केवलः श्रेष्ठः संख्या च परिकीर्त्यते ।
कङ्को यमे लोहपृष्ठे तथा ब्राह्मणलिङ्गिनि ॥ १२५ ॥
काकः पीठसर्पिणि स्याच्छिरोवक्षालने द्विके ।
द्वीपमानद्रुभेदेषु काकं काककदम्बके ॥ १२६ ॥
योषितां रतबन्धे च काका तु काकजङ्घिका ।
काकोदुम्बरिका काकमाचिका रक्तिका तथा ॥ १२७ ॥
काकोली काकनाशोऽथ कोकश्चक्रे वृकेऽपि च ।
खर्जूरी पादपे भेके स्यादगस्तु महीरुहे ॥ १२८ ॥
शैले सरीसृपे भानावङ्कमन्तिकगात्रयोः ।
उपसर्जनभूते स्यादस्त्युपायप्रतीकयोः ॥ १२९ ॥
अङ्गानि वृद्धिशेषे स्युरिङ्गः स्यादिङ्गितेऽद्भुते ।
ज्ञानजङ्गमयोश्चाऽघं दुःखे व्यसनपापयोः ॥ १३० ॥
ओघः प्रवाहः सङ्घातोऽद्भुतनृत्तपरम्परा ।
उपदेशश्च चञ्चुस्तु त्रोट्यां पञ्चाङ्गुले तथा ॥ १३१ ॥
अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे ।
श्याङ्गः क्षणे समज्यायां युष्मट्टोऽट्टालके भृशे ॥ १३२ ॥
चतुष्कभक्तयोर्हट्टे इडैले च बुधस्त्रियाम् ।
गोवाक्स्वर्भूमिनाडीषु तथा स्यादिडराशिवत् ॥ १३३ ॥
अणोऽग्रकीलेऽश्रौ सीमन्यणुर्वीहल्पयोः पुनः ।
अन्तः प्रान्ते च पार्श्वे च स्वरूपे निश्चये तथा ॥ १३४ ॥
नाशावयवयोः स्यादीतिरजन्यप्रवासयोः ।
स्याद्धृतिः स्मृतौ रक्षायामेतः कर्बुर आगते ॥ १३५ ॥
ततं वीणादिवाद्ये स्यात्ततो व्याप्तेऽनिले पृथौ ।
तातोऽनुकम्प्ये जनकेऽन्दुः स्यान्निगडभूषयोः ॥ १३६ ॥
अन्धोऽन्धकारेऽक्षिहीने स्यादाधिर्बन्धकाशयोः ।
मनोर्तौ व्यसनेऽधिष्ठानेऽन्नं स्वसितभक्तयोः ॥ १३७ ॥
इनः स्वामिनि सूर्ये स्यादुन्नं क्लिन्ने दयापरे ।
बिम्बं तु प्रतिबिम्बे स्यान्मण्डले बिम्बिकाफले ॥ १३८ ॥
आमोऽपक्वे रोगभेदरागयोः स्यादुमा पुनः ।

शिग्रपत्न्यां हरिद्रायां कीर्तिकान्त्यतसीष्वपि ॥ १३९ ॥
पयुर्यञ्जहये वाहे स्यादरोऽष्टादशार्हति ।
भवत्यरं तु चक्राङ्गे शीघ्रशीघ्रगयोरपि ॥ १४० ॥
आरो रीरी शनिर्भौमे आरा चर्मप्रभेदिनी ।
इराऽम्भोवाक्सुराभूषु ग्रहदैत्यकुरङ्गयोः ॥ १४१ ॥
अलिः सुरापुष्पलिहोरालं तु हरितालके ।
तथा निरर्थके ज्ञेयमालिस्तु विशदाशये ॥ १४२ ॥
अनर्थे सख्यामावल्यां सेनावालुर्गलन्तिकाः ।
आलुः कन्दे भेलुकेऽपी लोर्वा गौर्वाक् बुधाङ्गना ॥ १४३ ॥
लीला केलिर्विलासश्च शृङ्गारभावजक्रिया ।
लोलश्चले सतृष्णे च लोला तु रसनाश्रियोः ॥ १४४ ॥
अविर्मेषे रवौ भूमिधरे मूषककम्बले ।
अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितौ ॥ १४५ ॥
आशा ककुभि तृष्णायामाशुस्तु व्रीहिशीघ्रयोः ।
ईशः स्वामिनि रुद्रे च स्यादीषा हलदण्डके ॥ १४६ ॥
उषा स्याद्बाणदैत्येन्द्रनन्दिन्यां रजनावपि ।
आगः स्यादेनोवद्रघे मन्तावाशीर्हितैषणे ॥ १४७ ॥
उरगस्य च दंष्ट्रायामुषः सन्ध्याप्रभातयोः ।
उरो वक्षसि मुख्ये स्यादोजो दीप्तिप्रकाशयोः ॥ १४८ ॥
अवष्टम्भे बले धातुतेजस्योकस्तु सद्मनि ।
ऊकस्त्वाश्रममात्रेऽहिभुजङ्गे वृषभभयोः ।
ईहोघमरपूहेत्येते द्विस्वरैकादश मताः ॥ १४९ ॥
अथाऽव्ययानि कथ्यन्ते प्राग्वदेव स्वरक्रमात् ।
अः स्वार्थेऽप्यस्यभावेऽपि स्यादा स्मरणवाक्ययोः ॥ १५० ॥
आङीषदर्थेऽभिव्याप्तौ क्रियायोगेऽवधावपि ।
आ स्यादधृतिस्मृत्योराः सन्तापप्रकोपयोः ॥ १५१ ॥
इः स्यात् खेदे प्रकोपोक्तावी क्रोधे दुःखभावने ।
प्रत्यक्षे सन्निधौ चाऽपकर्षोक्त्यामन्त्रणार्थयोः ॥ १५२ ॥
उः प्राधान्ये प्रकाशे च प्राबल्यास्वास्थ्यशक्तिषु ।
विभागे बन्धने मोहे भावे लोभोर्ध्वकर्मणोः ॥ १५३ ॥
उं प्रश्नेऽङ्गीकृतौ रोषेऽप्यूं प्रश्ने रोषवाचि च ।
ऋ कुत्सावाक्ययोरेपे हैहैशब्दाविव स्मृतौ ॥ १५४ ॥
आमन्त्रणाह्वानयोरों प्रणवेऽङ्गीकृतावपि ।
उऊशब्दा तु होहोवत् हूनौ सम्बोधनेऽपि च ॥ १५५ ॥
कः पापीयसि कुत्सायामपिद्वय निवारणे ।

कं सुखे वारिशिरसोः किं प्रश्ने कुत्सनेऽपि च ॥ १५६ ॥
चोऽन्योन्यार्थसमाहारान्वाचयेषु समुच्चये ।
हेतौ पक्षान्तरे तुल्ययोगिताविनियोगयोः ॥ १५७ ॥
पादपूरणेऽवधृतौ तु विशेषेऽवधारणे ।
समुच्चये पादपूर्तौ धिक् निर्भर्त्सननिन्दयोः ॥ १५८ ॥
नि स्यात् क्षेपे भृशार्थे च नित्यार्थे दानकर्मणि ।
सन्निधानोपरमयोः संश्रयाश्रयराशिषु ॥ १५९ ॥
मोक्षेऽन्तर्भावेऽधोभावे बन्धने कौशलेऽपि च ।
नु प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोः ॥ १६० ॥
नञोपदर्थे सादृश्ये तद्विरुद्धतदन्ययोः ।
व्यतिक्रमे स्वरूपार्थे निषेधाभावयोरपि ॥ १६१ ॥
वा समुच्चय एवार्थे उपमानविकल्पयोः ।
विशिष्टेऽतीते नानार्थे वै हेतौ पादपूरणे ॥ १६२ ॥
शं कल्याणे सुखे संप्रकृष्टार्थसङ्गमार्थयोः ।
शोभनार्थे समार्थे ह सम्बुद्धौ पादपूरणे ॥ १६३ ॥
हा शुग्दुःखविषादेषु हि हेतावयधारणे ।
विशेषे पादपूर्तौ च ही विस्मयविषादयोः ॥ १६४ ॥
दुःखहेतौ च हं रोषभाषणेऽनुनयेऽपि च ।
हुं तर्के प्रश्नेऽङ्ग पुनरर्थे सम्बोधने मुदि ॥ १६५ ॥
अति प्रोक्तप्रकर्षार्थे लङ्घनार्थभृशार्थयोः ।
स्तुतावसंप्रतिक्षेपे आराद् दूरसमीपयोः ॥ १६६ ॥
इति स्वरूपे सान्निध्ये विवक्षानियमे मता ।
हेतौ प्रकारप्रत्यक्षप्रकाशेष्ववधारणे ॥ १६७ ॥
एवमर्थे समाप्ते स्यादुत प्रश्नवितर्कयोः ।
समुच्चये विकल्पे चाऽथोऽप्यथ स्यात्समुच्चये ॥ १६८ ॥
मङ्गले संशयारम्भाधिकारानन्तरेषु च ।
अन्वादेशे प्रतिज्ञायां प्रश्नसाकल्ययोरपि ॥ १६९ ॥
अनुर्लक्षणवीप्सेत्थंभूतभागेषु सन्निधौ ।
सादृश्यायामहीनेषु पश्चादर्थसहार्थयोः ॥ १७० ॥
अन्वाक्षेपे परिप्रश्ने अन्युक्तावयधारणे ।
वाक्यारम्भेऽनुनयेऽप्यामन्त्रणाऽनुज्ञयोरपि ॥ १७१ ॥
नाना विनोभयानेकार्थेष्वप्यस्ने यहर्षयोः ।
अपकृष्टे वर्जने च विपर्ययवियोगयोः ॥ १७२ ॥
निर्देशार्थे विकृत्यर्थे विबुधैः परिकीर्त्यते ।
अपिः संभावनाशङ्कागर्हणासु समुच्चये ॥ १७३ ॥

प्रश्ने युक्तपदार्थेषु कामचारक्रियासु च ।
उपासन्नेऽधिके हीने सादृश्यप्रतियत्नयोः ॥ १७४ ॥
तद्योगव्याप्तिपूजासु शक्तावारम्भदानयोः ।
दाक्षिण्याचार्यकरणदोषाख्यानात्ययेषु च ॥ १७५ ॥
अभिर्वीप्सालक्षणयोरित्थंभूताभिमुख्ययोः ।
स्यात्समा सन्निधानार्थे सहार्थेऽलं निवारणे ॥ १७६ ॥
अलङ्करणसामर्थ्ये पर्याप्तिष्ववधारणे ।
एवं प्रकारेऽङ्गीकारेऽवधारणसमार्थयोः ॥ १७७ ॥
नूनं तर्के निश्चये वाऽपि प्रश्नेऽनुनयेऽपि च ।
अये क्रोधे विषादे च स्मरणे सम्भ्रमे तथा ॥ १७८ ॥
अन्तर्मध्येऽन्ते स्वीकारे ऊर्युरयूररी तथा ।
विस्तारेऽङ्गीकृते वाऽथ वियोगे व्याप्तिशुद्धिषु ॥ १७९ ॥
आलम्बने विज्ञाने स्यादेवौपम्येपदर्थयोः ।
निकारेऽवधारणे स्यादुषा रात्रितदन्तयोः ॥ १८० ॥
अतः स्यान्निर्देशे पञ्चम्यर्थे हेत्वपदेशयोः ।
इतो विभागे नियमे पञ्चम्यर्थे च कीर्त्यते ॥ १८१ ॥
तत आदौ परिप्रश्ने पञ्चम्यर्थे कथान्तरे ।
अहा धिगर्थे शोके च करुणार्थविषादयोः ॥ १८२ ॥
अह क्षेपे नियोगे चाऽप्यहो प्रश्नविचारयोः ।
हीही हास्ये विचारे स्यादन्ततोऽवयवे तथा ॥ १८३ ॥
उत्प्रेक्षायां पञ्चम्यर्थे शासनेऽप्यहहः स्मृतः ।
खेदाऽद्भुतयोरित्युक्तोऽनेकार्थोऽव्ययसङ्ग्रहः ॥ १८४ ॥

अथैकाक्षरा धातवः—भू सत्तायाम् । पा पाने । जि जि अभिभवे । इन्दु शु गतौ । ऋ प्रापणे । दैप् शोधने । कै गै रै शब्दे । खै खदने । क्षै से क्षये । पै ओवै शोषणे । वल चल इल ईल अग इग गतौ । अघु गती । जज जजि युद्धे । अट पट गतौ । वठ संघाते । हद मतौ । लोट्ट लौड्ड उन्मादे । अड उद्यमे । लड विलासे । मडु अभियोगे । अत गतौ । अड्डु बन्धने । इदि परमैश्वर्ये । जम शब्दे । अम मीमृ गतौ । शुच्य अभिषवे । इवि व्याप्तौ । अत्र गतौ । शश प्लुतगतौ । इष इच्छे । परस्मैभाषा ॥

मीङ् गतौ । डीङ् विहायसागतौ । उङ् कुङ् शब्दे । पुङ् गतौ । रुङ् रोपणे च । पूङ् पवने । मेङ् प्रणिदाने । देङ् पालने । ढौक कौलये । कुङ आदाने । कटु गतौ । ऋघि गत्याक्षेपे । हुङ् हुड् गतौ । ईज कुत्सने । अहु हिंसातिक्रमयोः । एड विबाधायाम् । अठ गतौ । दद दाने । एध वृद्धौ । अठ शब्दे । ऊङ् शब्दे । अय गतौ । पंस् सन्तुष्कतामे । ईष गतिहिंसादर्शनेषु । ईह चेष्टायाम् । ऊह वितर्के । आत्मनेभाषा ॥

णीञ् प्रापणे । हृञ् हरणे । भृञ् भरणे । धृञ् धारणे । कृञ् करणे । अह् पृङ् गतौ । अल भूषणपर्याप्तिवारणेषु । ञर आदानसंवरणयोः । अस कष गत्यादानयोश्च । उभयतोभाषा ॥

धृण् सृङ् गतौ । वृत वर्तने । वृध् वृतादिगणश्च । आत्मनेभाषा ॥

षेञ् तन्तुसन्ताने । वृत् । यजादिपरस्मैभाषा ॥

अक अग कुटिलायां गतौ । लड जिह्वोन्मथने । परस्मैभाषा । इति भ्वादयः ॥

अद भक्षणे । भा दीप्तौ । वा गतिगन्धनयोः । पा रक्षणे । ला आदाने । रा दाने । दाप् लवने । मा माने । इक् स्मरणे । इण् गतौ । वी प्रजनकान्त्यसनखादनेषु । षु प्रसवैश्वर्ययोः । तु गतिहिंसापूरणेषु । यु मिश्रणे । कु शब्दे । अस भुवि । षस सस्ति स्वप्ने । परस्मैभाषा ॥

इङ् अध्ययने । शीङ् स्वप्ने । षूङ् प्राणिगर्भविमोचने । ईड स्तुतौ । ईर गतौ कम्पने च । ईश ऐश्वर्ये । वस आच्छादने । आङः शासु इच्छायाम् । आस उपवेशने । आत्मनेभाषा । इत्यदादयः ॥

हु दानादनयोः । ओहाक् त्यागे । भी भये । पॄ पालनपूरणयोः । हङ् गतौ । परस्मैभाषा ॥

डुदाञ् दाने । डुधाञ् धारणपोषणयोः । डुभृञ् पोषणे च । उभयतोभाषा । इति जुहोत्यादयः ॥

शो तनूकरणे । दो अवखण्डने । छो छेदने । षोऽन्तकर्मणि । इष गतौ । सूच् निरसने । षच समवाये । ऋधु वृद्धौ । असु क्षेपणे । परस्मैभाषा ॥

षूङ् प्राणिप्रसवे । दूङ् परितापे । दीङ् क्षये । धीङ् अनादरे । पीङ् आधारे । मीङ् हिंसायाम् । रीङ् श्रवणे । लीङ् श्लेषणे । व्रीङ् गतौ । एते मन स्वादयः ॥

पद गतौ । अन प्राणने । आत्मनेभाषा । इति दिवादयः ॥

षुञ् अभिषवे । षिञ् बन्धने । शिञ् निशाने । मिञ् प्रक्षेपणे । चिञ् चयने । धूञ् कम्पने । कृञ् हिंसायाम् । वृञ् वरणे । उभयतोभाषा ॥

हि गतौ वृद्धौ च । दु उपतापे । प्रीङ् प्रीतौ । आप्लृ व्याप्तौ । परस्मैभाषा ॥

ष्टिघ् गतिवृद्ध्योः । अशू व्याप्तौ । आत्मनेभाषा । इति स्वादिः ॥

तुद व्यथने विभाषितः । धि धारणे । पृद क्षरणे । पृ प्रेरणे । णू स्तवने । धू विधूनने । परस्मैभाषा ॥

कुङ् कूङ् शब्दे । कुटादिः । दृङ् अनादरे । धृङ् अवस्थाने । आत्मनेभाषा । इति तुदादिः ॥

अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । उन्दी क्लेदने । परस्मैभाषा ॥

ञिइन्धी दीप्तौ । आत्मनेभाषा । इति रुधादिः ॥

ऋणु गतौ । उभयतोभाषाः । इति तनादिः ॥

षिञ् बन्धने । मीञ् हिंसायाम् । दोङ् तरणे । उभयतोभाषा ॥

दु मर्दि उदर रोदः अरुदत् अरोदीत् रुरोद अरोद अरोदि आदर उदार इन्दिन्दिर दुरोदर रद कक्षा कक्ष कुक्षि आकाङ्क्षत् अकाङ्क्षि अक्ष अक्षि इक्षु उक्षन् धारा धरा धराधर धार राधा रुधिर रोधम् धुरन्धर अधरत् अधारि धुर धुरा रवि अम्बर वीर वारंवारम् विवर वार वर वैर वारि आरवे उर्वी उर्वरा अर्वन् ववे वैरि वर रव अरण रण रोण सरिणा आरेण अरेणि आरण अर्णः ईरण रणन् रणरण रेणु ऊणा ऊर्णा अरुणत् अराणीत् अराणि राण भानु नाभि नभस् सन्निभ पूषा पौष पिपेष पुपोष अपुषत् अपेषि अपोषि हेलि हलि हल हलो हेला दिन नन्दन नन्दिन् दीन दनु निन्दा नाद दून नदी दान नद निदान निन्दु निनद नाद इन्दुना निनिन्द ननन्द ननाद नदीन नन्दन ननाद् नुनोद विभा विभव भव भाव विभाव भुवम् भुवः भुवाम् भावी वैभव विभु अभवत् अभूत बभूव अभावि बभूवे भास अभासि सभा हरिः षोडशार्थः, राहु हरित् हर रहः रंह हार होरा हार हूरा आहार हीर अहरहः हारि आरोह आरुरोह अहारि अर्हः ही अर्ह अर्हि रोचिः रुचिः रुचः अर्चिः अर्चा चर्च चारु चर्चरी चर चार आचार चराचर चारु चारी चञ्चुर चीर चौर चिरम् चिरा रुचिर चचार रुरुचे रुचे अरुचत् अचूचुरत् अरोरचत् घृणि घृणा अभीशु शम्भु शुभ शोभा शुशुभे शुशोच शोच शची शुच शौच धाम मधु अधम इध्म आधमत् धूम सुधा मेधा पाद पादप अपादि पदे पद वस वासव संवित् आसव सव वास आवास संवास सेवा वासम् अवसत् श्वास मह महस् मही महिमन् मुमोह मिमेह महान् मोह हिम हेम होम तेजस् जाति जातो जित जात तज जन्तु जातु जतु जेता आतप ततप तपः तप ताप तेपे पात पेते पपात तत पीत पूत अतीतवत् पितृ पौत्र हेति हति हत हन्त आहुति हूत हित हत आहत शाप शप अशापे पशु पाश पशी शष्पा अशपत् गल गलि गेल गुड गोला गोल गण्ड गड्ड गिल अगलत् अलगत् अगालि लङ्ग लगु लगुड यशः आशय शय अशायि शय्या शिश्ये आलाप लोप लोलुप अलुपत् अलूलुपत् अल पाल पलि लेप पाण्डु पाल फल लुप पील पीडा आपीड आललाप लुलोप लुलुम्प पाल लिपि वलप उडुप उपल वलाप अन्य नय न्याय नयन आनन योनि यान यून अयन अन्योन्यम् आनाय आनीय आनिनाय देश अदिशत् दिशः दृश दशा दंश उद्देश आदेश आदिदेश गीत गति गत अतुङ्ग गन्तु गीता आगन्ता गाति नट नटन वाल बाल अबला बला लव अलवत् अलावीत् वला लव वूल वली आवलि आलम्ब वेत्ता वित्त वृत्ति योगि याग योग, गेय गाय अगायत् अगायि पान पीन आपान अपान आपीन पुनः ताल लता ताली तालु उत्ताल तल तूल तैल लता तुलित तुला अतुल लाति लातु पल पिल एल बलि वल बल अलीलवत् अलूलवत् वात वृत्त निवृत्त तावत् एतावता वृत्तान्त वृन्त वेता वाता धन धेनु निधि निधान इन्धन उग्र गौर गौरी रङ्ग राग रोग अग्र गुह गार गिरि गिरा रङ्गव रङ्ग उरग अङ्गिरस् अगार अङ्गार रोगी रागी आगः अगिरत् अग्रे मृढ मङ्गल मुण्ड मण्ड मौलि माल ललना मल्ल मल्ली अमल लोम ममल मिमील अमिलत् शिव शिवा शौव विश्व विश विशा आवेश वश वशा वशी अविशत् विवेश शीर आर्या आर्य अय

राय ईर्ष्या अरयः ऐपरः दिति अदिति उदन्त दन्त दन्ति दान्त दुत सदा दुन्द ददि आददति दूत दूति उद्दात्त दत्त उदेति उदित ददातु ददाति ददते दत्ते तुदति तुदतु हय हाय बाहु बाहवि बहु बहिः बाहर हाव विवाह आहव आहाव अवहत् उवाह हविः बह्वो वहो दशनाः शनि निशा अशनिः ईशान शनैः नाश अनिश शुना शूनः नाश ननाश कवि कम्बु बक कम्बी अम्बिका केवा मन्द अमोद मुदा मोद मिमेदे दम मासः सायम् सेयम् सोयम् असूया आयं अयसा यस्या अयास्यन् दोपा दोप जीव बीज वाजि जव अजीवत् अजीजवत् जिजीव आयाम यम याम मधु मघ अमेय आमय माया कुहु कुह माघ मेघ मोघ मघा शिशिर शरत् शौरि शूर राशि शर सहस् सहसा सेहा हास हंस सोहम् सिंह साहस सेहे असः गगन गान नाग नग अनङ्ग काश आकाश कौशिक कुशिक केश कुश अङ्कुश शशक शकम् शुक कोश अशोक शङ्का शूक अनन्त नृत्त नीति नत नति तेन तताम तेने आनीत तनु तन् नूतन नुन्न नेता नुति अभ्र भर भार भीरु भूरि भरो रम्भा आरम्भ विवत् वयस् वायु यव यायु युवन् अवयन् उवाय धन घनाधन कुकुल ककुभ कुम्भ भेक कुम्भी अपाचि चम्पा चम्प अपचत् अपीपचत् चाप चम्पू पर पार पुर पूर पौर अपर अपार अरोप पुरी उदीची उदञ्चत् जम्भ अभजत् अभञ्जि अभाजि भेजे भाज अम्भोज भोज भुज पवि वापी अवपत् अपीपयत् उवाप पीवा अतिभी भूत भीति भित्ति भीता भापा अभापि भूपा भिषक् भीषा वचस् वाचा वचा वच्च अपोचत् उवाच वीचि चक्षु वाच अगमत् गम आगम मागाः छन्दः आच्छाद उच्छेद् अच्छिदत् धातुः धाता धौत आधौत अधीते अधीत अधत्त धत्ते धत्तः कंस सेक कसा अकसत् अकासि अङ्गज गज जगौ काम मूक मोक किमु कामिन् कामुकवाणी वीणा वणिक् वेणी वाण सती सीता सुत छत सित असित आसित सन्ति सन्तु सतत सन्तत सेतु सोता सात मेना मेनाक मनाक् मान मुनि मौन नेमी नमि नौमि नुमः नामन् मेने मीन मनस् मानिन् जय जाया अय जेय अजयत् जीयात् यज्ञ युयोज सेना सेनानी सूना आसन्न आसीन आसन नासा गुहा गुह विङ्कु गूह अगूह अगाहि चण्डी चण्ड उच्चण्ड चौड चल अचल अचल चेल चोल चञ्चल चलाचल चावलि चूला चुला चुली चञ्चा अलोच अचलन् अचालीत् चचाल भृङ्गी भृङ्ग भोग भग भाग भङ्ग भागी भोगी जड जाल लाजा ] । एवमन्येऽपि ज्ञेयाः ॥

स्थानमुरःकण्ठादि, तच्चित्रम् । यथा—

नेताऽनन्तनतोऽनन्तः सोऽध्यासीदिलातले ।
धुतासिदासितोत्सान्नतुसन्नतुन्नतः सदा ॥

दन्त्यस्थानः ।

प्राज्यसत्त्वोर्जितस्फूर्तिचर्यो मर्यादयान्वितः ।
समुद्रवन्मुद्रश्रीः सज्जो जयति सज्जिनः ॥ १ ॥

अकण्ठ्यः । एवमन्यत् । एते शब्दाः सुप्राप्यत्वान्न दर्शिताः ॥

गतिर्गतप्रत्यागतगोमूत्रिकातुरगपदपादगतप्रत्यागतार्धगतसर्वतोभद्रार्धभ्रमादीति॰

नविश्रम् । यथा—

शूरः स्थिरतरस्फारशरभारधरः पुरः । आरवैरभरस्मेरवीरवारहरः परः ॥

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| शू | र: | स्थि | र | त | र | स्फा | र | श | र | भा | र | ध | र: | पु | |
| | र | आ | र | वै | र | भ | र | स्मे | र | वी | र | वा | र | ह | र: | प | र: |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| शू | स्थि | त | स्फा | श | भा | ध | पु |
| र: | र | र | र | र | र | र: | र: |
| आ | वै | भ | स्मे | वी | वा | ह | प |

गोमूत्रिकाद्वयं पूर्वार्धापरार्धयोः, अथवा आद्यद्वितीययोः, तृतीयचतुर्थयोश्च पादयोरिति द्वौ भेदौ ।

अथ तुरगपदरीत्या श्लोकाक्षराङ्कन्यासः—

श्रीस्त्रिंशज्जिनविंशतिश्चयजिनश्रीकण्ठषड्विंशती-
न्दूनाविंशतियुग्मपौषदशभावेकत्रयोविंशतिः ।
सप्तत्रिंशद्विपसत्कलाभुवनतत्षड्वर्गवर्णा शुभ-
स्सेनापक्षसलक्षणस्वरसभासार्कद्विविंशाः शराः ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | ३० | ९ | २० | ३ | २४ | ११ | २६ |
| १६ | १९ | २ | २९ | १० | २७ | ४ | २३ |
| ३१ | ८ | १७ | १४ | २१ | ६ | २५ | १२ |
| १८ | १५ | ३२ | ७ | २८ | १३ | २२ | ५ |

} तुरगपदाक्षराङ्कन्यासः ।

चतुर्भिः पादैः क्रमेण चत्वारः पादाः, प्रतिपादमष्टौ अङ्कस्थानानि । श्रीः एकः । जिनाश्चतुर्विंशतिः । श्रीकण्ठा एकादश । इन्दुकलाः षोडश । ऊनाविंशतिरेकोनविंशतिः । पौषदिनान्येकोनत्रिंशत् । भानि सप्तविंशतिः । सत्रिंशदेकत्रिंशत् । सत्कलाः सप्तदश । भुवनानि चतुर्दश । तन्मुख एव वर्ण एकविंशतितमः । वर्गवर्णाः पञ्चविंशतिः । सेना अष्टादश । पक्षतिथयः पञ्चदश । लक्षणानि द्वात्रिंशत् । स्वराः सप्त । सभानि अष्टाविंशतिः । सार्कत्रयोदश । द्विविंश द्वाविंशतिः । शराः पञ्च । शेषं सुगमम् ॥

हयपदस्य रीत्यन्तरम्—

हृद्यपीह्वियैविरायैपिद्वादुयादिह्रोपे । देदैषपूशुह्रयोपायेदैदेदोपुरहु ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ह | दू | य | पी | हि | पे | यि | दा |
| यै | पि | हा | दु | या | दि | ही | पै |
| दे | है | प | यू | पु | हू | द | यी |
| पा | ये | दै | हे | दी | यु | पू | हु |

} तुरगपदबन्धः ।

हयपद इति चत्वारो वर्णाः, श्लोकेऽपि चत्वारः पादाः, ततो यथाक्रममेकैकपादं प्रत्येकैकवर्णो ज्ञेयः । स्वरैरक्षरसंख्या ज्ञेया । अ आ इ ई उ ऊ ए ऐ, इत्यष्टस्वराः । श्लोकपादे चाऽष्टवर्णाः । यथा-ह हा हि ही हु हू हे है, य या यि यी यु यू ये यै, प पा पि पी पु पू पे पै, द दा दि दी दु दू दे दै, अयं श्लोकस्तुरगपदेन कृतो, हदूयपीत्यादि ॥

का रता निजहारेन
नर्वेहाजनितारका ।
चारुमारपराधीन
न धीरा परमा रुचा ॥

} पादगतप्रत्यागतम् ।

एवमर्धगतप्रत्यागतादीनि ॥

अनुलोमप्रतिलोमशब्दा यथा—[ दिवं दिवा दिवे नाक देवा देवं देव नवदेवता सेव सेवन दान वर वीभानु भानो घोतन हंस हंसा हेलि दिन दिना यादीने विभा भासः विकर्तन जगच्चक्षुः धामाकरं करे महातेजाः सदा लोक सदालोकःविनता कलङ्का तारका तारया कालिनी राधा राधया हरि देव जीवा भार्गव कविना शन्दो वातापिना कालो कालं शार्व निशया तमा तमिस्रा याम माया मेया मतः पक्षि राका मास मासे सहा माधव नभ नव कल्पान्त क्षय गगन बलाहकाः सुत्रामा शुनासीर जम्भा देव नन्दी नन्दन वन मय यमराज राक्षसाः पलादो नलकूबर रस विमनेन शङ्करम् मती हर हरम् पिनाकेपि पिनाकिनागङ्गा कपालिना मेना भैरवो हेरम्ब हेरम्बा विनायक नन्दी स्थविर विधावापि वेधसा जनार्दन दामोदर सनातन वनमालिका विधुकैटभा वैनतेय कंसा कंसे नन्दकरामा सहसान्वितः बलावलं बला नालीका रमा रमया मदन पातालोकः भारती वेदाः वेदना वेदैः वव वह लोक सार निन्दा शापा धुकम् पन्नताल रव तालाधना तोयधनयोः वशा वश कच्छपिका कोलम्बक तत मृदङ्ग रागरागौ हस हास हासि कार दरदा अट्टहास अतिहासशोक कोश कोप क्षयम रयोग अतिभी आन्तकम् कटकी कटकम् कम्पम् कम्पा रोदना रणरण ककाम मेघा मोक्ष मद शयन संध्ये शङ्का नवतमसम्भव सानन्दा तव गर्व साहङ्कार सहङ्कारा ममतामानेन स्मयेन साहमहमिका सम्भावन सम्भावना सम्भावनया कार्पण्य रत दैन्यवती सव्यामा ध्रमता मोहो सत्र सभा आवेश दम सभ्रमता

उन्नयन साध्याहार वितर्कं मनिश कालेन कालो सायम् वासना मारका यन्त्र विभा-
वेन विभावा ततभाति अनुभावतः व्यक्त वनभावोन रस एषा भूमिका पात्र येष मह-
खासमरत रसा पुत्र रङ्ग रङ्गामतार रतागारसा नसावतार रङ्गावतार कर्ई क्षम सकल
शैलाली नामधारक धनधारक सरवक वसु नान्दी वास वासन्तिक नैहासिकोपिता अनुकं
चिर हास माधुकं भावो राजहावा देवा हावेन कुमार कुमारा दारक बाला स्वसा भद्रन्त
निज्ञा योज्या मनुजमनुजा मानव पोत वशा क्षीर शैशवे नसवालता वयः तरु युवा
नतारुण्यपुलक चारुण्यङ्ग यौवनं प्रवयाः जरत्यात याम विरासा स्थविर जल्पाक
यद्वद पतन यद्वदपरमा दीनवादिवंदिता विकस्वर वदान्यामदविधेयो दवानशूलिका
स्वैरितापरवश पराधीन स्थावरव्यायाम नाल कविवर्णना मेधा विविल विशारद
सशनिमनीषितोविपत निष्णातोन्तः रक्ष कुशलेन , दमप्रतिभान्वितः अन्तर्वाणि
रसावेद् वदावद् पवाप्त घनाघन वे दुर्विधोः मनः निम नियोज्य परिचारक दास वस्व-
तन भारिक मासे अलङ्कातरभोतेन महेच्छस्नया महामनाः कीनाश किंपचान देवा
अनुक्रोश कदनं बन्धनं निर्वासन निर्वापणक वर्जन कर्वन कल्पन जल्पसा अवर्द्धनैः
घातोद्यत आततायिन नामाक्षेखियशः तेमृतासरतापार्ण व्यसक आलिक कैतव सभ्या-
पिशुना व्यसनार्त्तक स्तेना ऐकागारिक स्तेय मन्द प्रणव दाम त्याग अर्थ व्यय
याचका याचन सहन अशनाय रोचक पिपास पिपासा रसा दानमस्तु तरलानिला निष्ठा
नते मन रम्भा लाजा शून्य रसायन दानव भारं सभा विर्ल काञ्चनी धान्य धान्याक
नागरम् विदेही जनुके मासो लावक उदार कामना व्यसन बन्धन रोचन मांस पीवानं
पीवर अमासिके वसु गता केशव वातकि रोम सदा सदामय पामा रव अक्षत कल
नीलोराग लेखक कुलिक खेलिनी शिवङ्कर शवल जवी वेग रंहः तर सेवा देवेन जव जाव
सहर योगामिका गारव जात्यक्षवंश वनिता वशा वासा तरललोलना मनोज्ञ कहाव
रजाः यातरः वया विना सभे छता मालिनी गर्भ पौत्र वै जन ममास देवर गोलक
समान ननान्दा नवर केलिना देवन पिता महसा अपमाता घना काय देहः कुन्तला
पाश रचनां केशांश कशा केशे लपन वदन लोचन विलालन निध्यान घोतन लोम
रदन रदना दशना पक्ष्मा मेलक करजा खननातालिका मेद कङ्कालम् बलम् लव सानन्द
विलेपनः यक्षकर्दम घनसार स्थासक कम्बलम् नववसन शयन चोद ऊर्ध्वं लोक अमराः
अहराः विमाना नमस्ति वसुधा सुधा अर्यमा तरणि अ अर्म्यस अर्कतः पतङ्ग
विरोचन हरि आतपो आतपी लक्ष्मप मङ्गल अङ्गारक उशना आगस्त्या वपराग वासर
विभात त्रियाम तिमिर हेम अल्पक अन्तरिक्ष आकाशम् अम्बरम् अनघ बलाहका
आसार आपरा विदिक् कौशिक मातलि अमरावती मन्दार सन्तान अतिथी लेखक
कौणप यातुधान कुबेर धनदा अलका अगुल्या अजगवम् अलोका महादेवी एकदन्त
शवानन्द उत्सवर्थीः नरक अलम्ब अङ्गज दनुज . सरस्वती अतिहास वैनतेय अर्थवाद
कौलीन विशन आक्रोश आक्षेप अभिख्या सम्भाषा वियोग गन्धर्वंण अनुत्तरे च वर्णे
अन्वचायजनव धाना अक्षत यत्रल उपल दधिसार न्याय अदन आशंसा अविनीत हारित
अंसल मांसल विकलाङ्ग पाटव राजयक्ष्मा कुरङ्ग उपचार हरिद्रा राग मातो समासद

